# ॥ श्रीविनायकस्तोत्रम् ॥

ॐ

मूषिकवाहन मोदकहस्त चामरकर्ण विलम्बितसूत्र ।
वामनरूप महेश्वरपुत्र विघ्नविनायक पाद नमस्ते ॥

देवदेवसुतं देवं जगद्विघ्नविनायकम् ।
हस्तिरूपं महाकायं सूर्यकोटिसमप्रभम् ॥ १॥

वामनं जटिलं कान्तं ह्रस्वग्रीवं महोदरम् ।
धूम्रसिन्दूरयुद्गण्डं विकटं प्रकटोत्कटम् ॥ २॥

एकदन्तं प्रलम्बोष्ठं नागयज्ञोपवीतिनम् ।
त्र्यक्षं गजमुखं कृष्णं सुकृतं रक्तवाससम् ॥ ३॥

दन्तपाणिं च वरदं ब्रह्मण्यं ब्रह्मचारिणम् ।
पुण्यं गणपतिं दिव्यं विघ्नराजं नमाम्यहम् ॥ ४॥

देवं गणपतिं नाथं विश्वस्याग्रे तु गामिनम् ।
देवानामधिकं श्रेष्ठं नायकं सुविनायकम् ॥ ५॥

नमामि भगवं देवं अद्भुतं गणनायकम् ।
वक्रतुण्ड प्रचण्डाय उग्रतुण्डाय ते नमः ॥ ६॥

चण्डाय गुरुचण्डाय चण्डचण्डाय ते नमः ।
मत्तोन्मत्तप्रमत्ताय नित्यमत्ताय ते नमः ॥ ७॥

उमासुतं नमस्यामि गङ्गापुत्राय ते नमः ।
ओङ्काराय वषट्कार स्वाहाकाराय ते नमः ॥ ८॥

मन्त्रमूर्ते महायोगिन् जातवेदे नमो नमः ।
परशुपाशकहस्ताय गजहस्ताय ते नमः ॥ ९॥

मेघाय मेघवर्णाय मेघेश्वर नमो नमः ।
घोराय घोररूपाय घोरघोराय ते नमः ॥ १०॥

पुराणपूर्वपूज्याय पुरुषाय नमो नमः ।
मदोत्कट नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥ ११॥

विनायक नमस्तेऽस्तु नमस्ते भक्तवत्सल ।
भक्तप्रियाय शान्ताय महातेजस्विने नमः ॥ १२॥

यज्ञाय यज्ञहोत्रे च यज्ञेशाय नमो नमः ।
नमस्ते शुक्लभस्माङ्ग शुक्लमालाधराय च ॥ १३॥

मदक्लिन्नकपोलाय गणाधिपतये नमः ।
रक्तपुष्प प्रियाय च रक्तचन्दन भूषित ॥ १४॥

अग्निहोत्राय शान्ताय अपराजय्य ते नमः ।
आखुवाहन देवेश एकदन्ताय ते नमः ॥ १५॥

शूर्पकर्णाय शूराय दीर्घदन्ताय ते नमः ।
विघ्नं हरतु देवेश शिवपुत्रो विनायकः ॥ १६॥

फलश्रुति

जपादस्यैव होमाच्च सन्ध्योपासनसस्तथा ।
विप्रो भवति वेदाढ्यः क्षत्रियो विजयी भवेत् ॥

वैश्यो धनसमृद्धः स्यात् शूद्रः पापैः प्रमुच्यते ।
गर्भिणी जनयेत्पुत्रं कन्या भर्तारमाप्नुयात् ॥

प्रवासी लभते स्थानं बद्धो बन्धात् प्रमुच्यते ।
इष्टसिद्धिमवाप्नोति पुनात्यासत्तमं कुलं ॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
सर्वकामप्रदं पुंसां पठतां श्रुणुतामपि ॥

॥ इति श्रीब्रह्माण्डपुराणे स्कन्दप्रोक्त विनायकस्तोत्रं सम्पूर्णम् ॥